Bādarāyaṇa's

# PRAŚNAVIDYĀ

## with the commentary of Bhaṭṭotpala

*Edited by*

**J. S. Pade,** M.A.




**ORIENTAL INSTITUTE**
**BARODA**
**1972**

THE M. S. UNIVERSITY ORIENTAL SERIES, No. 10

*General Editor*

**B. J. Sandesara,**
MA., Ph.D.
Director, Oriental Institute, Baroda.

Bādarāyaṇa's

# PRAŚNAVIDYĀ

with the commentary of Bhaṭṭotpala

*Edited by*

**J. S. Pade,** M.A.
Research Officer,
Oriental Institute,
Baroda.




**Oriental Institute**
**BARODA**
**1972**



First Edition,
Copies 250
1972




*Reprinted from the Journal of the Oriental Institute.*

**Price Rs. 2-50 P.**




*Copies can be had from :—*

**The Manager,**
**THE UNIVERSITY PUBLICATIONS SALES UNIT,**
**M. S. University of Baroda Press ( Sadhana Press ),**
**Near Palace Gate, Palace Road,**
**BARODA.**

Printed by Shri B. M. Shah, Manager, The Maharaja Sayajirao University of Baroda Press ( Sadhana Press ), near Palace Gate, Palace Road, Baroda and published by Dr. B. J. Sandesara, Director, Oriental Institute, Maharaja Sayajirao University of Baroda, Baroda, September 1972.

## FOREWORD

It is a matter of great pleasure that the text of Bādarāyaṇā's Praśnavidyā with the commentary of Bhaṭṭotpala edited by Shri J. S. Pade, Research Officer, Oriental Institute, is now published as No. 10 in the M. S. University Oriental Series The work was first printed in the Journal of the Oriental Institute and is now brought out separately.

Praśnavidyā was prevalent throughout India and I hope that the publication of the present work of Bādarāyaṇa will be welcomed by students and scholars of astrology.

Oriental Institute
Baroda, 8th July, 1972.

B. J. SANDESARA
Director

# INTRODUCTION

The text of Bādarāyaṇa's *Praśnavidyā* with the *Cintāmaṇi* commentary of Bhaṭṭotpala is based upon a single manuscript deposited in the library of the Oriental Institute, Baroda. The details of the ms. are as follows:—

1 Place of deposit :—Baroda, Oriental Institute.

2 Acc. No. :— 9308.

3 Title :— *Praśnavidyā Cintāmaṇiṭīkāsamvalitā.*

4 Author :— Bādarāyaṇa—Commentator :—Bhaṭṭotpala.

5 Date :— Undated.

6 Folios :— 22.

7 No. of lines in each folio :— 12.

8 No. of letters in each line :— 30.

9 Material :— Paper.

10 Script :— Devanāgarī.

11 Style :— Written in one uniform hand-writing.

12 Size :— 9.3" × 5.6".

13 Condition :— Good.

Mss. of this work are available in the libraries of Indian institutes. As the text consists of 76 verses only and as its antiquity required its immediate publication ; the long process involving procuring of mss. from other institutes and collating them was not deemed necessary. Scribal errors have been silently corrected while preparing the press-copy and suggestions have been given within brackets.

The work is attributed to the celebrated sage Bādarāyaṇa. He is referred to as an authority with great reverence by Varāhamihīra in his *Bṛhatsaṁhitā* 40.1 ; [वृश्चिकवृषप्रवेशे भानोर्यें बादरायणेनोक्ताः ॥ ग्रीष्मशरत्सस्यानां सदसद्योगाः कृतास्त इमे ॥] and he is quoted by Bhaṭṭotpala and other commentators at several places. Nothing else is known about him or about his work.

The text :—

The present text consisting of 76 verses is only a chapter of the Saṁhitā of

Bādarāyaṇa. It deels with *Praśnas*. Bhattotpala refers to it in his commentary in the following words :—

( १ ) इत्याचार्यो बादरायणः स्वसंहितायामेकमध्यायं लोकानुग्रहार्थं चिकीर्षुस्तत्रादावेव तत्प्रयोजनप्रदर्शनार्थमाह ।

( २ ) प्रश्नेऽस्मिन्नपि बादरायणकृते ।

( ३ ) दृष्ट्वा गर्गवसिष्ठदेवलकृतां पाराशरीं यावनीमन्यां चापि हि बादरायण इमां यां प्रश्नविद्यां व्यधात् ॥

( ४ ) बादरायणकृतेऽस्मिन् प्रश्नशास्त्रमहोदधौ ॥

Greek words like *Meṣūraṇa* are used in the text. The earliest limit of the date of the text cannot be fixed for want of sufficient conclusive evidence. The text is earlier than the date of Bhaṭṭotpala (966 A.D.)

Praśnavidyā has been prevalent in India since Vedic times. The *Mādhyandina Saṁhitā* of the *Śukla Yajurveda* refers to *Praśnin* and Praśnavīvāka. ( प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षाया अभिप्रश्निनं मर्यादायै प्रश्नविवाकम् मा. सं. ३०.१० ). However, works of earliest known authors are known only in name. The earliest known work available exclusively on the subject is Bhaṭṭotpala's *Praśnasaptati.* The publication of the present work, therefore, will be highly appreciated and welcomed by scholars interested in astrology.

---

श्रीः

बादरायणविरचिता

# प्रश्नविद्या

## उत्पलाचार्यकृतविवरणसहिता

### श्रीगणेशाय नमः ।

केशाजार्कनिशाकरक्षितिजविज्जीवास्फुजित्सूर्यजान्
विघ्नेशं स्वगुरून् प्रणम्य शिरसा देवीं च वागीश्वरीम् ॥
प्रश्नेऽस्मिन्नपि बादरायणकृते स्पष्टार्थसत्प्रत्यये
शिष्याणां हितकाम्यया द्विजवरष्टीकां करोत्युत्पलः ॥ १ ॥

कानीह शास्त्र ( स्त्रे ) सम्बन्धाभिधेयप्रयोजनानि भवन्तीत्युच्यन्ते । आब्रह्मादिविनिसृतमिदं वेदाङ्गम् । उपायोपेयवाच्यवाचकलक्षणो नाम सम्बन्धः । उपायः शास्त्रम् । उपेयं ज्ञानम् । वाचकः ( कं ) शास्त्रम् । वाच्यो ( च्यं ) ज्ञानम् । त ( तल् ) लग्नतत्नवांशकग्रहयोगग्रहेक्षणवशाल्लाभालाभसुखदुःखजयपराजयजीवितमरणादिज्ञानमभिधेयम् । सत्पात्रविषये सत्यकथनादिहलोकसिद्धिरिति प्रयोजनम् । किमेभिरुक्तैरित्यत्रोच्यते ।

सिद्धिः श्रोर ( श्रोतृ ) प्रवृत्ता( त्ती )नां सम्बन्धकथनाद्यतः ॥
तस्मात् सर्वेषु शास्त्रेषु सम्बन्धः पूर्वमुच्यते ॥ २ ॥

( मीमांसाश्लोकवार्तिकम् १-१९ )

सर्वस्य ( स्यैव ) हि शास्त्र( स्य ) कर्मणो वाऽपि कस्यचित् ॥
यावत् प्रयोजनं नोक्तं तावत्तत् केन गृह्यते ॥ ३ )

( मीमांसाश्लोकवार्तिकम् १-१२ )

इति । कस्य शास्त्रे अधिकारः । उच्यते । द्विजस्यैव । यतस्तेन षडङ्गवेदोऽध्येतव्यश्च । कानि षडङ्गानीत्युच्यते ।

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषमिति ( षां गतिः ) ॥ छन्दसां चेति ( न्दोविचिति ) इत्याह ( रित्येतैः ) षडङ्गो वेद उच्यते ॥ ४ ॥

इत्याचार्यो **बादरायणः** स्वसंहितायामेकमध्यायं लोकानुग्रहार्थं चिकीर्षुस्तत्रादावेव तत्प्रयोजनप्रदर्शनार्थमाह ।

पूर्वं परीक्ष्य जीवितमन्यत् पश्चात् शुभाशुभं पुंसाम् ।
जगदभ्युद्यतमखिलं करोति किं प्राप्तकालस्य ॥ १ ॥

**पूर्व**मादौ **पुसां** नराणां **जीवित**मायुःप्रमाणं **परीक्ष्य** पर्यालोच्य ज्ञात्वेत्यर्थः । तस्माज्ज्ञानात् **पश्चादनन्तरमन्यद**परं **शुभाशुभं** ( शुभमशुभं ) वा फलं **परीक्ष्य** । लाभजयजीवितसुखबोधनादि शुभम् । अलाभपराजयमरणदुःखव्याधिप्रादुर्भावादिकमशुभम् । यस्माद् ज्ञः ( **जगत्** ) त्रैलोक्य**मखिलं** समग्र**मभ्युद्यतं** गन्तुं प्रवृत्तं कालमृत्योः समीपगतस्य **प्राप्तकालस्य** दैवं किं करोति किं दधाति। प्राप्तः कालो यस्यासौ प्राप्तकाल इति ॥ १ ॥

पुनरप्येतदेवाह ।

ज्ञात्वायुषः प्रमाणं मरणनिमित्तं मृतस्य गमनं च ॥
स्थानं च मरणकाले ततो नृणां चैव निर्देश्यम् ॥ २ ॥

**आयुषो** जीवितस्य **प्रमाणं** वर्षादिसंख्यं **ज्ञात्वा** बुधः तथा मरणे जीवितक्षये **निमित्तं** कारणं हुतवहजलशस्त्रज्वरामयतृट्क्षुत्क्षतानामन्यतमं तथा **मृतस्य** प्राणैर्वियुक्त ( स्य ) **गमनं** गतिः सुरपितृतिर्यङ्नरकमोक्षाणामन्यनमं तथा **मरणकाले** मृत्युसमये **स्थानं** परदेशं तन्मध्ये वा **ततः** पश्चा**न्नृणां** पुरुषाणां शेषमन्यत् शुभाशुभं निर्देशं ( श्यं ) यत् ब्रूयादिति ॥ २ ॥

अथ दैवस्य प्रेरकत्वमाह ।

दैवेन चोद्यमानश्च शुभेनाशुभेन वा नरः सर्वः ॥
सहसा गच्छत्यवशाद् दैवज्ञसमाश्रयं यस्मात् ॥ ३ ॥

दैवं प्राक्कर्मेत्यर्थः । तेन **चोद्यमानः** प्रेर्यमाणः । किंभूतेन ( **शुभे** ) अ ( **ना** ) **शुभेन वा** दुष्कृतसुकृताख्येन **सर्वो** निःशेषो **नरो** मर्त्यजनः । **यस्माद्** यतो हेतोः **सहसा** झटित्येवा [ **वशादे** ] कंत ( कान्त ) हेतोः [ **दैवज्ञ** ] **समाश्रयं** कालविदः स्थानं **गच्छती**त्यर्थः ॥ ३ ॥

प्रश्नजातकयोर्मुनिमतेन साम्यमाह ।

अगृहीतजातकस्य तु पृच्छाकालोऽपि जन्मसमयस्थः ( यः स्यात् ) ॥
भवतीति **कमलयोनि**र्वदति तथापरे मुनयः ॥ ४ ॥

**अगृहीतजातकस्या**लिखितजन्मसमयस्य **पृच्छाकालः** प्रश्नसमयो**ऽपि** जन्मजातकतुल्यो **भवति** । **इति कमलयोनि**र्ब्रह्मा कथयति । **तथा** तेनैव प्रकारे**णापरे मुनयो**ऽन्ये परमर्षयस्तत्समयं जातकतुल्यं वदन्ति । तथा चोक्तमाचार्य**वराहमिहिरेण।** जन्मन्याधाने प्रश्नकाले चे( वे )ति ( लघुजातकम् ३-२ )

अत्रैवाचार्य मा( आ )ह ।

जन्मसमये यदुक्तं शुभाशुभं दिव्यदृग्भिराचार्यैः ॥
पृच्छाकालेऽपि नृणां तदेव भवतीति विज्ञेयम् ॥ ५ ॥

**आचार्यैः** शास्त्रकारैर्नारायणोक्त( त्थ )वसिष्ठपराशरप्रभृतिभि**र्जन्मसमये** जातककाले **यच्छुभाशुभं** कथितं जन्मलग्नवशात् **नृणां** पुरुषाणां प्रश्नोद्यतानां जन्मफलतुल्यफलं **भवतीति विज्ञेयं** ज्ञातव्यम् । **इति**शब्दो निश्चयार्थे ॥ ५ ॥

आदावेवायुर्ज्ञानं व्याख्यामीत्याह ।

यस्मादतीन्द्रियमिदं जीवितमरणं समुच्यते मुनिभिः ॥
तस्मात्तदेव पुंसां वक्ष्यामि विशेषतः पर( प्रथ )मम् ॥ ६ ॥

**मुनिभि**र्गर्गादिभिः कालदर्शिभि**र्यस्माद्** यतो हेतो**रितं( दं ) जीवितमरण**मायुर्मृत्युश्चा**तीन्द्रिय**मिन्द्रियाण्यतिक्रम्य वर्तते त**दतीन्द्रियं** प्रत्यक्षं **समुच्यते** सम्यगभिधीयते **तस्माद्धे**तोः **पुंसां** पुरुषाणां **तदेव** जीवितमरणं विशेषेण **प्रथम**मादौ कथयिष्यामि ॥ ६ ॥

अधुना सर्वप्राणिनां परमायुःप्रमाणमाह ।

परमायुर्नृगजानां विंशत्यधिकं शतं सपञ्चदिनम् ॥
चतुरधिकाऽपि च विंशतिरायुर्गोमहिषयोः सदिनम्( ना ) ॥ ७ ॥

अविकाजानां षोडश पञ्चयुता विंशतिः खरोष्ट्राणाम् ॥
द्वादश वर्षाणि शुनां कथिता द्वात्रिंशदश्वानाम् ॥ ८ ॥

**नृगजानां** पुरुषाणां गजानां च **परमायुः** परं प्रकृष्टं जीवितं **विंशत्यधिकं** वर्ष**शतं (स)पञ्चदिनं** पञ्चभिरहोरात्रैः सहितं ज्ञेयम्। **गोमहिषयोः** गोश्च महिषस्य च **चतुरधिका विंशति**र्वर्षाणां **सदिना।** चतुर्विंशतिर्वर्षाणि दिनमेकं च तयोः परमायुरित्यर्थः। सह दिनेन वर्तत इति सदिना। अपि च तद्वृत्य (त्त) पूरणाय समूहः समुच्चयो वा। **अविकायः (जाः)** पशवः। **अजा**श्छागाः। **अविका**-ग्रहणं मृगादीनामप्युपलक्षणार्थम्। तेषा**मविकाजानां षोडश** वर्षाणि परमायुः। **खरोष्ट्राणां** गर्दभकरभाणां **पञ्चयुता विंशति**र्वर्षाणि परमायुः। [ शुनां द्वादशवर्षाणि ] एवं सर्वेषां परमायुः कथितम्। अथ हयानामेव **द्वात्रिंशत् कथिते**ति सम्बन्धः ॥ ७-८ ॥

अथ परमायुः परिज्ञानाय सूर्यादीनां गुणकानाह।

पञ्चैकसहिताविंशतिमनुरन्ध्रवसुत्रिकेशसमसंख्याः ॥

क्रमशः कालार्थमिमे गुणकारा दिनकरादीनाम् ॥ ९ ॥

रव्यादिशन्यन्तानां ग्रहाणां **क्रमशः** परिपाट्या **कालार्थं** कालज्ञानाय **इमे गुणकारा** ज्ञेयाः। तत्र रवेः ( **पञ्च** ) ५। चन्द्रस्यै**कसहिता विंशतिः** २१। **मनव**श्चतुर्दश १४ भौमस्य। **रन्ध्र**संख्या नव (९) बुधस्य। **वसवो**ऽष्टौ ८ गुरोः। **त्रिक** संख्या त्रयः ३ शुक्रस्य। **ईशा** एकादश शनेः ११ ॥ ९ ॥

अधुनाऽयुः प्रमाणानयनमाह।

उद्गतकलासमूहं परमायुः प्रस्ताडितं समुद्धृत्य ॥

मण्डलकलाभिराप्तो वर्षादिरथायुष कालः ॥ १० ॥

यस्मिन् काले प्रष्टा नष्टजन्मपृच्छां करोति तस्मिन् काले न स्फुटं न मन्त्रेण कालमुपलभ्यते घटिकादिकं ( यः स्फुटममत्रेण काल उपलभ्यते घटिकादिकः ) तत्कर्मणा त्रिप्रश्नगदितेन लग्नं कार्यम्। तस्य राशयस्त्रिंशता संगुण्य भागान् संयोज्य ततः पुनः षष्ट्या संगुण्य लिप्ताः संयुज्य **उद्गतः** उदितः **काल( कला )समूहो** यस्य नरादिजन्मकाल-लग्नस्य सः। तं **परमायुषा ताडितं मण्डलकलाभि**श्चक्रलिप्ताभिः २१६०० **समुद्धृत्य** भक्त्वा ( क्तो ) **वर्षादिः** वर्षमासदिनघटिकापलात्मक **आयुषः कालः** स्यात् ॥ १० ॥

अथ तस्य स्फुटीकरणमाह।

उदयसमीपं ( प ) गृहग्र [ ह ] स्थानाभ्यस्तं तदायुर्हृतशेषः ॥
शुद्धांद्ध ( द्धोध ) स्त्वेकतरो यो यस्या( स्य )भव( वे )त्तथासन्नः ॥ ११ ॥

**उदयं** लग्नं तस्य **समीपं** निकटं द्वादशस्थानमित्यर्थः । यतोऽतीतं द्वादशाद्वर्तमानं लग्नादागामि द्वितीयं ज्ञायं ( य ) त [ इति ] दैवविदामागमः । तत्रोदयसमीपे द्वादशस्थाने **यद्गृहं** मेषादिकं वर्तते तस्य यो **ग्रहः** स्वामी रव्यादिकः । तथा **पञ्चैकसहिता विंशति**रित्यनेन ग्रन्थकारेण यो गुणकारः उक्तः तया गुणकारगुणनया**ऽभ्यस्तं** गुणितं सविकलं कृत्वा ततोऽधः प्रकृतिस्थच्छेदैर्भागमपहृत्य यल्लब्धं तदुपरि योजयेत् । शेषं यथास्थितमेव । तत्रोपरि वर्षस्थानं तदायुषो यस्य जन्तोर्जन्मान्विष्यते तत्परमायुषा भागो हार्यः । लब्धं त्याज्यं तेन प्रयोजनं नास्ति । यच्छेशं तद्ग्राह्यम् । तत**स्तदायुर्हृतशेषशुद्धोधः** अधो यश्छेदः परमायुस्तस्मात्तदेव शेषं वर्षादि शोधयेत् पातयेत् । तयोर्द्वयोर्मध्या**देकतरः** एकः । **तथा** तेन प्रकारेण तस्य नरादे**रासन्नो** निकट उपरिष्टादधस्ताद्वा यदश्मी( नुमी )यते...संभवेत् । तयोर्द्वयोरनुमानेन वक्ष्यमाणविधानेनेति ॥ ११ ॥

त्रिनवषट्कसमुत्थं क्रमशो बालादिमध्यवृद्धानाम् ॥
पुंसां जन्मकालः समतीतः समभिधातव्यः ॥ १२ ॥

**त्रिनवषट्काः** प्रसिद्धाः । ३ । ९ । ६ । एभ्यः समुत्तिष्ठतीति **त्रिनवषट्कसमुत्थं क्रमशः** क्रमेण परिपाट्या **बालादिमध्यवृद्धानां पुंसां** नराणां स **जन्मकालो** जन्मसमयः **समतीतो**ऽतिनिष्क्रान्तो वर्षाधिकः **समभिधातव्यो** वक्तव्यः । एतदुक्तं भवति । यदि बालादेर्जन्तोर्वार्षिकात्प्रभृति वर्षचत्वारिंशतं यावत् पूर्वायुष्यमानं न संवदति तदा तत्र त्रिके देयं । शोध्यं द्वा( द्वि )वर्षस्य [ ते ]न ततः संपद्यते । एवं मध्यस्य नव नव शोधनेन च वक्तव्यम् । एतच्च सत्यरूपं भवतीति ॥ १२ ॥

एवमतीतकालमभिधायाधुनैष्यकालस्यायुःप्रमाणज्ञानमाह ।

पुनरपि स एव कालो वर्षादिर्यः पुरागतो लग्नात् ॥
विश्लिष्टः स्वादायादेष्यग्रहगुणहतः कार्यः ॥ १३ ॥
परमायुर्हृतशेषः कालः स च देहिनामेष्यः ॥
उभयोरपि संयोगो यः स नृ( नरा )णामायुषः कालः ॥ १४ ॥

**उद्गतकालसमूह**मित्यनेन प्रकारेण **यः पुरा** पूर्ववर्षादिरायुषः कालो **लग्नादागतः** स **स्वादायादायुषो विश्लिष्टो** हीनः **कार्यः** । तस्मात् स शोधनीय

इत्यर्थः। ततो यः शेषकालः **एष्यग्रहगुणहतः कार्यः**। **एष्य** आगामी लग्नाद् द्वितीयं स्थानं तस्य यो (ग्रहः)स्वामी तथा वर्षं तस्य प्रागुक्तो **गुणो** गुणाकारः तेन **हत**स्ताडितः **कार्यो** गुणनीयः सविकल इत्यर्थः। ततः स्वच्छेदेरु(दस्यो)पर्युपरि लब्धं संयोज्य वर्षस्थाने परमायुषो भागो हर्तव्यः। लब्धेन प्रयोजनं नास्तीति **शेषः कालः स देहिनां** प्राणिना**मेष्यः**। तावत् कालं तस्य जन्तोरायुषः शेषोऽस्तीति विज्ञेयम्। **उभयो**र्द्वयोरतीतैष्ययोः कालयोः संयोगादैक्यात् प्रभवति। **स नराणां** पुरुषाणां सर्वकालः। नरग्रहणमन्योपलक्षणार्थम्। अन्येषां प्राणिनामपीति ॥ १३-१४ ॥

अत्रैव प्रकारान्तरदर्शनमाह।

लग्नादादित्याद्वाप्यतिशयवीर्याद्ग्रहाद्वापि ॥
पूर्ववदायुः प्रवदेन् मतिमान् सर्वजन्तू(सत्वा)नाम् ॥ १५ ॥

**उद्गतकाल(कला)समूहमि**त्यत (१०) आरभ्य **पुनरपि स एव कालो वर्षादिर्यः पुरागतो लग्नादि**(१३)त्येतदनन्तरं यत्कर्माभिहितं **तल्लग्नात्** कार्यम्। आदित्यं लग्नरूपं परिकल्प्य तस्मात् कार्यम्। अथवा**ऽतिशयवीर्या**न्वितात् **ग्रहात्** सबलोपेतात् ग्रहात् तात्कालिकाद्वा कार्यम्। **पूर्ववत्** पूर्वोक्तेन प्रकारेण **मतिमान्** पण्डितः **सर्वसत्वानां** सर्वप्राणिनां नरादीनामित्यर्थः। इति (**अपि**) शब्दो निश्चयार्थः ॥ १५ ॥

अथ प्रकारान्तरेणाह।

उदयकलोद्गमने तद्गुणिते त्रिंशताहृते लब्धाः ॥
वर्षायनर्तुमासा दिनानि नाड्यस्तथा प्रसवे ॥ १६ ॥

अस्यार्थः। **उदयं** लग्नं तस्य कला **उदयकलाः** तासा**मुद्गमने** उदयकाल उद्गमनं तस्मिन्। एतदुक्तं भवति। प्राग्वा तात्कालिकं लग्नं संसाध्य राशीनपास्य शेषभागान् लिप्तीकृत्य यद्भवति स उदयकाल उच्यते। तस्मिन्नुदयकाले उद्गमने तद्गुणितेन तदित्यनेन लग्नस्य परामर्शः। तस्य गुणस्तद्गुणः। अयमर्थः। लग्नस्पर्शो (स्येशो) ग्रहः स्वामी तस्य यः प्रागुक्तो गुणकारस्तेनोदयकालो गुणनीयः सविकलः स यथाका(क)लमुपहृत्योपरि योजयेत्। तत्र त्रिंशता भागो हर्तव्यः। लब्धं वर्षाणि। शेषं द्वाभ्यां गुणयेत्। तत्र द्व्ययनप्रमाणं वर्षम्। ततस्त्रिंशता भागमपहृत्य लब्धं तदयनम्। न कश्चिल्लभ्यते तदुत्तरायणम्। अथैको लभ्यते तद्दक्षिणायनम्। एवमन्यत्रापि परिभाषा ज्ञेया। अयनं वर्षाणामधः स्थाप्यम्।

एवं शेषं त्रिंशता षष्ट्या संगुण्य लब्धं दिनघटिकापलान्तं मासादधः स्थाप्यम्। उत्तरायणर्तूनां शिशिराद्या गणना। दक्षिणायनस्य वर्षाद्या। मासदिनानां स्वप्रारम्भात्। एवं वर्षाकालोत्पन्नप्रसवे जन्मनि ज्ञेयम्। जन्मकालात् प्रभृति वर्षमानं यावदतिक्रान्तमित्यर्थः। एवमतीतं कालं ज्ञात्वा तत्रार्कादयो ग्रहास्तात्कालिकाः कार्याः। तेभ्यो यथाभिहितजातकर्मणाऽऽयुर्ग्रहणं नीयत इति॥ १६॥

अधुना तात्कालिकग्रहेभ्य आयुषो विधानमाह।

भवननवांशकयोगाद् ग्रहाः प्रयच्छन्ति देहिनामायुः॥

उदितांशसमं होरा सा राशिसमं च वीर्ययुता॥ १७॥

अस्यार्थः। **ग्रहा** रव्यादयो **देहिनां** जन्तूनां **भवननवांशकयोगादायु**र्जीवितं **प्रयच्छन्ति** ददति। यस्मिन्नवांशके ग्रहो वर्तते स यस्य राशेः सम्बन्धी स च मेषादिगणनया यावत्संख्यो भवति तावन्ति वर्षाणि स ग्रह आयुर्ददाति। किञ्च भुक्तनवांशका ग्राह्या वर्षसंख्यया। भोग्येन नवांशकेनानुयातः कार्यः। अयमर्थः। तात्कालिकं स्फुटं ग्रहं लिप्तं पिण्डीकृत्य शतद्वयेन भागमपहृत्यावाप्तमंशकसमूहः। तस्य द्वादशभिर्भागमपहृत्य लब्धं त्यक्त्वा शेषं स्थाप्य-तानि वर्षाणि शेषं विलिप्ताभ्यो यत् स्थितं तत् सविकलं द्वादशभिस्त्रिंशता षष्ट्या च संगुण्य शतद्वयेन विभज्य मासदिवसघटिकाविघटिका वर्षाणामधः स्थाप्याः। अथ **भवननवांशकयोगाद् ग्रहा देहिनामायुः प्रयच्छन्ति। उदितांशसमं होरेति। होरा लग्नमुदितांशसममा**युः प्रयच्छति। ग्रहवयोभुक्ते( न ) लग्नेन नवांशकतत्संख्यावर्षाणि ददाति। भुज्यमानग्रहवदनुयातः कार्यः। एव**मुदितांशसमं होरा राशिसमा**नं च **वीर्ययुता होरा** लग्नं यदि **वीर्ययुता होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा** ( बृहज्जातकम्–१-१९ ) इत्यनेन प्रकारेण सबला भवति तदा प्राग्दत्तस्यायुष उपरि राशिसमानमायुर्ददाति। यावन्तो राशयो लग्नेन भुक्तास्तावत्संख्यानि वर्षाणि प्राग्लग्नायुषि वर्षस्थाने योजयेत्। भागैः सहानुपातः कथमुच्यते। भागादिकं लिप्तीकृत्य द्वादशभिस्त्रिंशता षष्ट्या च संगुण्याष्टादशभिः शतैर्विभज्याप्तमासदिनघटिकाविघटिकाः स्थापितायुषि संयोज्य लग्नायुर्भवति॥ १७॥

तस्य संस्कारमाह।

स्वदृक्काणनवांशकस्थिता द्विगुणमायुः [ स्वोच्चे स्थिताश्च ]॥

वक्रं च गतास्त्रिगुणं युगपद् गृहवक्रगास्तद्वत्॥ १८॥

जन्मकाले यो ग्रहः **स्वदृक्काण**स्थितस्तद्दत**मायुर्द्विगुणं** कार्यम् । तत्र स्वोच्चराशिस्थितस्यापि द्विगुणं कार्यम् । यश्च **स्वनवांशके** आत्मीयनवभागे **स्थितस्तस्य** त्रिगुणं कार्यम् । यः स्वोच्चे स्थितस्तस्यापि त्रिगुणं कार्यम् । अत्रापि त्रिगुणत्वे प्राप्ते सकृदेव त्रिगुणं कार्यम् । **युगपद् गृहवक्रगास्तद्वदिति । युगपद्गृहे** राशौ **वक्रे** च तुल्यकालमुपागमान् ग्रहा**स्तद्वत्** त्रिगुणमेव प्रयच्छान्ति । स्वदृक्काणनवांशकवर्गोत्तमे वक्रिता उच्चगताश्चासकृदेकवारं त्रिगुणमेव प्रकुर्वन्ति ॥ १८ ॥

अथायुषो हानिप्रदर्शनार्थमाह ।

नीचास्तमयोपगता हरन्ति पुंसां स्वायुषार्द्धानि ॥

अरिभवनसन्निविष्टास्त्रिभागमुशन( आ र्कि वै )मुख्याः ॥ १९ ॥

ये ग्रहा जन्मनि स्वनीचराशौ स्थितास्ते स्वादायुषोऽर्द्धं हरन्ति । यदायुस्तैर्दत्तं तस्मादर्धमपनयन्तीत्यर्थः । एवं येऽस्तोपगतास्तेऽप्यर्धं हरन्ति । **किन्तूशना( नो )र्कि-वैमुख्याः । उशनाः शुक्रः । आर्किः** शनिः । ततो **वैमुख्या** वियोगो येषां तथाभूता अपहरन्ति । शुक्रशनिव्यतिरिक्ता अस्तमिता ग्रहा अर्द्धमपहरन्तीत्यर्थः । यद्यप्यत्र सामान्येनोक्तत्वात् सर्वासु हानिष्वनयोर्वैमुख्यत्वात् ( यत्वं ) प्राप्तं तथाप्यस्तमये केवल एव नान्यस्मिन्नित्याग[ म ]विदः । तथा **चाचार्यवराहमिहिरः । नास्तं यातौ रविजशुक्रौ** इति ( लघुजातकम्-६-४ ) । **अरिभवनसन्निविष्टा** इति । अरिभवने शत्रुक्षेत्रे सन्निविष्टाः स्थिताः स्वादायुष**स्त्रिभागं** च तृतीयांशमुपनयन्तीत्यर्थः ॥ १९ ॥

[ cf. यस्माद् बादरायणः ।

भूम्याः पुत्रं वर्जयित्वारिभस्था हन्युः स्वात् स्वात् स्वायुषस्ते त्रिभागम् ॥ अस्तं याताः सर्व एवार्धहानिं कुर्युर्हित्वा दैत्यपूज्यार्कपुत्रौ ॥ quoted by *Ruda* in his *vivaraṇa* on Varāhamihira's Horāśāra 7.2 ]

अधुना चक्रपातार्धहानिमाह ।

अर्धं व्यये स्वदा[ याद ] र्धादप्यर्धमायभवनगताः ॥
कर्मस्थाने षष्ठं पुनरपि च तदष्टमं नवमे ॥ २० ॥

निर्याणगता दशमं सप्तमगा घ्नन्ति तद् द्वियुतम् ॥
ग्रहसंख्यासममंशं तेषामेकैकशः स हरेत् ॥ २१ ॥

एष्वपि ( ष्वेव ) सन्निविष्टाः पापा द्विगुणं विनिघ्नान्ति ॥
एकर्क्षोपगतानां सो ( स ) भवति बलाधिको विशेषेण ॥ २२ ॥

यद्यप्यत्र सामान्येनोक्तं तथापि सौम्यग्रहा **व्यये** द्वादशस्थाने स्थिताः **स्वदायादा**त्मीयायुषोऽर्धं व्यपहरन्ति । **आयभवनगता** एकादशस्थाने स्थिता [ **अर्धादप्यर्धं** चतुर्थंभागमपहरन्ति । **कर्मस्थाने** दशमस्थाने स्थिताः ] षड्भागं हरन्ति । **नवमे** स्थाने स्थिताः **पुनरपि** च भूय**स्तदष्टमं** तस्मादायुषोष्टमं भागं हरन्ति । **निर्याण**स्थानमष्टमं तत्र **गताः** स्थिता **दशमं** भागं हरन्ति । **सप्तमगाः** सप्तमस्थानस्थिताः **तद्द**शमभाग**द्वियुतं** द्वादशं भागमपहरन्तीत्यर्थः । **पापा एष्वेव सन्निविष्टाः** समवस्थिता एतदेव **द्विगुण**मपहरन्ति । तेनैतदुक्तं भवति । पापग्रहा द्वादशे स्थाने समवस्थिताः स्वदायमपहरन्ति । एकादशेऽर्धं दशमे त्रिभागं नवमे चतुर्थं भागमष्टमे पञ्चमं भागं सप्तमे षड्भागमिति । तथा च **वराहमिहिरः । सर्वार्धत्रितुर्ये (चतुरि )न्द्रिय( तुं ) भागान् व्ययाद्धरन्त्यशुभाः । सन्तोऽर्धमतो वा[ म ]म्** । इति । ( लघुजातकम् ६·५ ) । **एकर्क्षोपगताना**मिति । तत्र द्वित्र्यादीना**मेकर्क्षोपगताना**मेकस्मिन् राशौ स्थितानां मध्याद् यो ग्रहो **विशेषेणा**तिशयेन **बलाधिको भवति** वीर्यवान् स चैक**ग्रहे ( हसंख्या ) सममंशं** ग्रहाणां यावत् ( ती ) संख्योक्ता **अर्धं व्यये स्वदायादि**त्यादिना तत्सममशे( शं ) [ ते ]न तुल्यं भाग**मेकैक[ शः ] स** एकैकस्मात् स्थानार्द्धेरद ( दर्धादिर ) पनयेदित्यर्थः । शेषास्तत्रस्था अपि ता( ना ) पहरन्ति । **वराहः । बलवानेकर्क्षेष्व ( र्क्षगो ह्ये )क** इति ( लघुजातकम् ६-५ ) ॥ २०-२२ ॥

इदानीं लाभालाभजयपराजयादीनां भावपरिज्ञानमाह ।
पूर्वविलग्नो राशिस्तत्कालछायया समभ्यस्तः ॥

सप्तोद्धृतावशेषे( षो ) ग्रहगुणकारेण गुणनीयः ॥ २३ ॥

**पूर्वविलग्नो** प्राग्विलग्नो **राशिः** प्राग्विधिना लिप्तः पिण्डीकृत**स्तत्कालछायया समभ्यस्तः** कार्यः । तत्कालप्रश्नसमये द्वादशाङ्गुलशङ्कोर्या छाया तया गुणनीयः । ततस्य राशेः पृथक्स्थस्य **सप्त**भिर्भागमपहरेत् । लब्धेन प्रयोजनं नास्ति । अवशेषं यत् **तद्गुणकारेणे**ष्टराशि**र्गुणनीयः** । तत्रैकावशेषे आदित्यो द्वाभ्यां चन्द्रः इत्यादिना पूर्वोक्तपूर्वोक्तशेषे सौरो ज्ञेय इति ॥ २३ ॥

अथ ग्रहगुणकारानाह ।

पञ्चैकविंशे मनवो नवाष्टदहनाः शिवाक्षाः( ख्याः )स्युः ॥

सूर्यादीनां क्रमशो गुणा( ण )काराः सर्वपृच्छासु ॥ २४ ॥

**सूर्यादिना**मादित्यादीनां ग्रहाणां **क्रमशः** परिवाद्या ( पाट्या ) **सर्वपृच्छासु** समस्तप्रश्नेषु लाभालाभजयपराजययाया( त्रा )दिष्वमी **गुणाकाराः** । तत्र **पञ्च** कस्य ।५। **एकविंशति**श्चन्द्रस्य ।२१। चतुर्दश भौमस्य ।१४। रन्ध्रसंख्या **नव** बुधस्य ।९। **अष्टौ** गुरोः ।८। **दहना**स्त्रयः शुक्रस्य ।३। **शिवाख्या** एकादश सौरस्य ।११। एते पूर्वोक्ताः। पुनः कथनमेषां भ्रान्तिनिरसनाय । एषामन्यतमेन गुणकारेण राशिर्गुणनीय इति ॥ २४ ॥

इदानीं लाभालाभजयपराजयादीनां भावाभावमाह ।

पुनरपि सप्तविभक्ता यदि सौम्यस्योपजायतेऽभ्युदयः ॥

प्रष्टुः कार्यं सिद्धं ब्रूयात् क्रूरग्रहे नैवम् ॥ २५ ॥

**पुन**स्तस्य गुणाकाराहतस्य राशेः पृथग् भक्तस्य सप्तभिर्भागो हार्यः । लब्धेन प्रयोजनं नास्ति । यच्छेषं तदेव गृह्यते। तस्मात् सप्तभिर्भक्तात् **सौम्यस्योदयो यदि जायते** उत्पद्यते । यदि चन्द्रजीवबुधसितानामन्यतमोऽवशिष्यते तदा **प्रष्टुः** पृच्छकस्य **कार्य**प्राप्तिमभीष्टार्थलाभं **ब्रूयाद्** वदेत् । **क्रूरग्रहे नैवम्** । आदित्याङ्गारकशनैश्चरावशेषे नास्तीति ब्रूयात् ॥ २५ ॥

अधुना कालज्ञानपरीक्षामाह ।

वर्गसमुदायभक्तं तद्वर्गशोधितं पुनस्तस्मिन् ॥

तत्र तु यस्य वर्गो न विशुद्धस्तद्वशात् कालः ॥ २६ ॥

**वर्ग**शब्देन गुणकारा उच्यन्ते । तेषां **समुदाय** एकीभावः प्राक्स्थापितो योऽवसानेष्टराशिस्तद्वर्गसमुदायेन **भक्तं** विहृतं कार्यम् । **वर्गसमुदाय** एकसप्ततिः ।७१। अनेन भागमपहृत( त्य ) लब्धेन प्रयोजनं नास्ति । यच्छेषं तद्गृह्यते । तस्माच्छेषा**त्तद्वर्ग**गुणकारक्रमेण रव्यादीनां संशोध्य **तत्र** शेषं **यस्य** ग्रहस्य **वर्गो** गुणकारो **न विशुद्धो** न पतित**स्तद्वशात् कालः** समयो लाभालाभजयपराजयादीनां वाच्यः ॥ २६ ॥

अधुना ग्रहाणां कान( ल )नियममाह ।

आरदिवाकरशेषे दिवसाः पक्षाश्च शुक्रेन्द्वोः ।

मासा गुर्ववशेषे सौम्ये ह्यृतवः शनैश्चरेष्टाः ( रब्दाः )स्युः ॥ २७ ॥

तत्रादित्यचन्द्रयोर्वर्गे शुद्धे यद्यारस्य वर्गो न शुध्यति तदा यावत् संख्याशुद्धशेषो-द्धारितस्तावद्भिर्दिनैः प्रष्टुरभीष्टं वाच्यम् । एवं यदि **दिवाकरस्य** आदित्यस्य वर्ग आरादेव न शुद्धति तदा तावद्भिरेव दिवसैर्वाच्यम् । एवं भृगुशशिनोः शुक्रचन्द्रयोः [ पक्षाः । गुरौ ] शेषतुल्या **मासा** वाच्याः । **सौम्ये** बुधे **ऋतवो** मासद्वयात्मका वाच्याः । **शनैश्चरे अद्वा** वर्षाणि स्युः ॥ २७ ॥

कालेन वक्तव्यमित्याह ।

[ आधाने सम्पत्तौ गमनागमे पराजये च जये ॥
शत्रूणां च विनाशे कालं यथोदितं ब्रूयात् ॥ २८ ॥ ]

**आधाने सम्पत्तौ** समृद्धौ **गमने** प्रवासे **आगमे** प्रवासनिवृत्तौ **पराजये** अभिभवे **जये** वर्षाणा( र्णाना )मभ्युदये तथा **शत्रूणां विनाशे** क्षयकरणे कालं समयो( यं ) **यथोदितं** येन प्रकारेण कथितं तं **ब्रूयाद्** वदेत् । **आरदिवाकरशेषे** दिवसा ( २७ ) इति ॥ २८ ॥

इदानीं पृच्छकविशेषमाह ।

राशिं चरमुदयगतं( न्तं ) पश्येद्यदि पापसंज्ञे( ज्ञिते )ष्वेव( कः ) ॥
एषां मध्यादेकतमं कार्यं गच्छति नाशं तथार्थं मनुष्याणाम् ॥ २९ ॥

**चरा** मेषकर्कतुलामकराः । **एषां मध्यादेकतम**राशि**मुदयन्तमु**द्गच्छन्तं प्राग्लग्नगतं प्राप्तं **पापसंज्ञि[ तेषु** ] पापग्रहेष्वादित्याङ्गारशनैश्चरेषु मध्या**देकः** । य एवं **पश्येद**वलोकयेत् । तदा प्रष्टुका ( ष्ट्ट )णां **कार्यं** करणीयं **तथा** शिवं श्रेयः **अर्थं** धनं **विनाशं गच्छति** क्षयं प्राप्नोति ॥ २९ ॥

अथ रोगार्तस्य पृच्छामाह ।

रोगार्त्ते जन्मर्क्षे ( र्क्षं ) पश्येत् पापो न तस्य शिवमस्ति ॥
लग्नान्निधनगतः पृच्छाकाले शुभं हन्यात् ॥ ३० ॥

रोगो ज्वरादिव्याधिस्तेनार्तः पीडितस्तस्मिन् **रोगार्ते** । **जन्मर्क्षं** जन्मराशि-स्तात्कालिकलग्नमित्यर्थः । यत उक्तम् ।

**अगृहीतजातकस्य पृच्छाकालो जन्मसमयः** । इति । ( ४ )

तज्**जन्मर्क्षं** यदि **पापः** पापग्रह इति । यदि **पश्येद्** विलोकयेत् । तदा रोगार्तस्य

**शिवं** श्रेयो **नास्ति** न विद्यते । अथवा स एव पापो **लग्नात्** पृच्छालग्नात् **निधनगतो**ऽष्टमस्थानगतः **पृच्छाकाले** प्रश्नसमये तदा **शुभं हन्यान्** नाशयेदित्यर्थः ॥३०॥

अन्यत्प्रश्नान्तरमाह ।

दुश्चिक्यनवमनिधनत्रिकोणकेन्द्राश्रिताः पापाः ॥
कुर्वन्ति कार्यनाशं घातं चार्थस्य जातस्य ॥ ३१ ॥

**दुश्चिक्यं** तृतीयं **नवमं** प्रसिद्धं **निधन**मष्टमं **त्रिकोणं** नव[ मं ] पञ्चमं **केन्द्राणि** लग्नचतुर्थसप्तमदशमानि । एतेषु यदि पापसंभवं( श्रयः ) । यदि **पापा** रविभौमसौराश्चा**श्रिताः** स्थिताः **कार्यस्य** करणीयस्य **नाशं** हानिं **जातस्य** समुत्पन्नस्य **चार्थस्य घातं** क्षयं कुर्वन्ति विदधतीत्यर्थः ॥ ३१ ॥

अन्यप्रश्नार्थमाह ।

द्विपदे चतुष्पदे वा राशावुदये यदा ग्रहः पापः ॥
सदृशं क्षपयत्यर्थं शुभो हि तं चैव वर्धते ॥ ३२ ॥

द्विपदराशयो मिथुनकन्यातुलाकुम्भाख्याः । चतुष्पदा मेषसिंहधनुषः । द्विपदपृच्छायां द्विपद**राशावुदये** प्राग्लग्नतां प्राप्ते यदि पापग्रहः समवस्थितः तदा **सदृशं** समा**नार्थं क्षपयति । द्विपदे** द्विपदं पुरुषादिकं **चतुष्पदे** चतुष्पदादिकं गवादिकमित्यर्थः । **शुभो हि** शुभग्रहस्तत्र समवस्थितः सद्विगुण ( स द्विपद )मिदं चतुष्पदं वा **वर्धते** वृद्धिं नयतीत्यर्थः ॥ ३२ ॥

अन्यप्रश्नार्थमाह ।

भवति स आश्रयणीयो द्वितीयसप्तमाष्ट( म )लग्नेषु ॥
यदि सन्ति शुभाः पुंसां धनमारोग्यं सुखं दद्युः ॥ ३३ ॥

द्वितीयं प्रसिद्धं सप्तमाष्टमावपि प्रसिद्धौ । तेषु सप्ताष्टमेषु द्वितीयलग्नेषु ( तेषु **द्वितीयसप्तमाष्टमलग्नेषु** ) राशिषु पृच्छालग्नात् **यदि सन्ति शुभा** भवन्ति तदा नृपादिक**माश्रयणीयं** भवति । विद्यत एवाश्रयः सफलो भवतीत्यर्थः । न केवलं यावत् **पुंसां** पुरुषाणां ते च सौम्यास्तत्र स्थिता **धनं** वित्त**मारोग्य**मारोग्यतां **सुखं** शर्म दद्युः ॥ ३३ ॥

अन्यप्रश्नार्थमाह ।

उदयं द्वितीयभवनं जामित्रमथा( थवा )ष्टमं तथा पापाः ॥
आश्रयणीयविनाशं मरणं सम्प्रयच्छन्ति ॥ ३४ ॥

**अथ वा** शब्दः प्रकारान्ताराय । **उदयं** लग्नं **द्वितीयं** प्रसिद्धं **जामित्रं** सप्तमम् । एतेषु स्थानेषु **तथा** तेनैव प्रकारेण यदि **पापाः** समाश्रितास्तदाऽऽ**श्रयणीयस्य** नृपादे**र्विनाशं** मरणं वा **सम्प्रयच्छन्ति** ददतीत्यर्थः ॥ ३४ ॥

अन्यप्रश्नार्थमाह ।

हिबुकं द्वितीयमथवा शुभस्तृतीयं समाश्रितो भवनम् ॥
आनयति नष्टमर्थं गन्तुं शक्नोति नैव दूरतरम् ॥ ३५ ॥

**हिबुकं** चतुर्थ**मथवा द्वितीयस्थानं तृतीयं** वा पृच्छालग्नात् यदि **समाश्रितः** समवस्थितस्तदा **नष्ट**मपहृत**मर्थमानयति** प्राप्यते ( प्नोति ) इत्यर्थः ॥ ३५ ॥

अथ प्रवासिनः पृष्टा( च्छा ) ।

लग्नाद् द्वितीयभवनं तृतीयं वै ( वा ) ग्रहेण संयुक्तम् ॥
दूरगतस्यागमनं प्रवृत्तिमथवा प्रदर्शयति ( विनिर्दिशति ) ॥ ३६ ॥

**लग्नात्** पृच्छालग्नात् **द्वितीयं भवनं** दुश्चिक्यं **तृतीयं वा ग्रहेण** येन केनचित् **संयुक्तं** समेतं भवति **दूरगतस्य** विदेशस्थ**स्यागमनं** भावेनम( ना )वर्तनं **प्रवृत्तिः** प्रवर्तन**मथवा** से( **वि** )**निर्दिशति** समादिशतीत्यर्थः ॥ ३६ ॥

अथ नष्टप्रवासिनां प्रश्नार्थमाह ।

लग्नाद्रसातलाद्वा शुभो द्वितीयेऽथवा तृतीयस्थः ।
ब्रूयान् नष्टप्राप्तिं प्रवासिनश्चाप्यथागमनम् ॥ ३७ ॥

**लग्नात्** प्रश्नलग्नाद् **रसातलाद्वा** चतुर्थस्थानात् **शुभः** सौम्यग्रहो द्वितीयो भवत्**यथवा तृतीयस्थः** । लग्नाद् द्वितीयतृतीयपञ्चमषष्ठस्थानानामन्यतमस्थानस्थो भवति तदा नष्टेऽपहृतेऽर्थे लब्धिं **प्राप्तिं ब्रूयाद्** वदेत् न केवलं **प्रवासिनो** विदेशस्थ**स्यागमनं** सम्प्राप्तिं **ब्रूयात्** ॥ ३७ ॥

अथ वृष्टिप्रश्नमाह ।

पृच्छाकाले वर्षे द्वितीयदुश्चिक्ययोर्यदेकतरः ॥
राशिर्जलजस्तस्मिन् जलग्रहो वा वदेद् वृष्टिम् ॥ ३८ ॥

**पृच्छाकाले** वर्षप्रश्नसमये **द्वितीयदुश्चिक्ययो**र्लग्नाद् द्वितीये तृतीये वा स्थाने **एकतर** एको **राशिर्जलज**स्तत्र भवति। जलचरो वा ग्रहस्तत्रस्थस्तदा वर्षं **वृष्टिं** ब्रूयाद् **वदेत्** ॥ ३८ ॥

अथ राशीन् ग्रहांश्च जलदसंज्ञानाह।

वृश्चिकलग्नवृश्चिक( वृश्चिकवृष )कर्कटकाः सप्तममृगमत्स्यकुम्भधराः ॥
जल( सजला )राशय एते शेषा अजलाः समाख्याताः ॥ ३९ ॥

शुष्काः कुजरविसौरा भृगुचन्द्रमसौ जलाख्यौ( श्रयौ ) ज्ञेयौ ॥
आश्रयतो गुरुसौम्यौ ग्रहास्तु शेषा यथा प्रोक्ताः ॥ ४० ॥

**वृश्चिकवृषकर्कटकाः** प्रसिद्धाः। **सप्तम**स्तुला **मृगो** मकरो **मत्स्यो** मीनः **कुम्भधरः** कुम्भः। **एते राशयः सजला** जलयुक्ताः **शेषा** ये परिशिष्टा मेषसिंहधनुःकन्या[ मिथुना ] **अजला** जलरहिताः **समाख्याताः** ॥ ३९ ॥

**शुष्काः कुजरविसौरा** इति। कुजोऽङ्गारको रविरादित्यः सौरः शनिरेते शुष्काः। **भृगुः** शुक्रः **चन्द्रमाः** शशी। एतौ **जलाश्रयौ** ज्ञेयौ। जलमुदकमाश्रयं संज्ञेयौ। सजलावित्यर्थः। **गुरु**र्जीवः **सौम्यो** बुध एता**वाश्रयतः** आश्रयौ ज्ञेयौ। यदा जलराशौ स्थितौ जलचरग्रहेण वा संयुक्तौ तदा सजलौ। अन्यथा शुष्कौ। मिश्रत्वाद् व्यामिश्रौ। येऽर्थ( र्थात् )शिष्टा अनयोर्येऽन्ये ग्रहा **यथा** येनैव प्रकारेण **प्रोक्ता**स्तेनैव ज्ञेयाः। शेषा अन्ययोगान्न विशेषा इत्यर्थः ॥ ४० ॥

अथ नदीपूरणज्ञानार्थमाह।

राशीश्वरो द्वितीये दुश्चिक्ये वा शुभग्रहोपगते ॥
भवति तदा नदीपूरं सप्तविंशे दिने वर्षम् ॥ ४१ ॥

पृच्छाकाले यो **राशि**र्लग्नगतस्तस्य य **ईश्वरः** स्वामी स एव यदि लग्नाद् **द्वितीये** स्थाने तृतीये वा भवति तथा च तस्मिन् **द्वितीये** तृतीये स्थाने **शुभग्रहोपगते** शुभग्रहाणामन्यतमेन संयुक्ते **तदा** तस्मिन् काले वक्तव्यम्। यथाऽद्यतनदिवसात् **सप्तविंशे दिने वर्षं** वृष्टिं नदीं पूरयतीति **नदीपूरं** प्रचुरवर्षं भवतीति वदेत् ॥ ४१ ॥

अथ चतुष्पदागमनमाह।

भवने तिर्यग्योनौ द्वितीयदुश्चिक्ययोस्तथैकतरः ( रे ) ॥
आगमनं तिरश्चां तु शुभसंयुक्ते वदेत् प्राज्ञः ॥ ४२ ॥

**भवने** तात्कालिके लग्ने **तिर्यग्योनौ** मेषवृषमृगाणामन्यतमे तिर्यग्जातीये तथा तेनैव प्रकारेण **द्विती( यदुश्चिक्य )योर्**मध्या**देकतरे** एकस्मिन्नपि **तिर्यग्योनौ शुभसंयुक्ते** शुभग्रहाधिष्ठिते सति **प्राज्ञः** पण्डित**स्तिरश्चां** तिर्यग्वाजि ( ग्जाती )नां प्राणिनां पशुगवादीना**मागमनं** संप्राप्तिं **वदेत्** ब्रूयादिति ॥ ४२ ॥

अथ जन्मलग्नराश्योः परिज्ञानार्थमाह ।

यस्माद्राशेर्भानुर्द्वितीयमथवाऽऽश्रयेत् स दुश्चिक्यम् ॥
जन्मनि तज्जन्मलग्नं हिबुकं यत्तत् मनुष्यग्रहम् ॥ ४३ ॥

**यस्माद्राशेर्**यतः पृच्छालग्ना**द्भानुः** सूर्यो **द्वितीयं** स्थानं समाश्रयेत् । सूर्यस्तत्रस्थो भवतीत्यर्थः । **अथवा** तृतीयं **दुश्चिक्यमा**श्रयेत् । [**स** ]राशिस्तस्य प्रष्टु**र्जन्मनि** जन्मसमये **जन्मलग्नं** ज्ञेयम् । तस्मिन् लग्नगते स जात इत्यर्थः ॥ ४३ ॥

अथ गमनप्रश्नार्थमाह ।

उदयगते चरराशौ भृगुबुधगुरुभास्करेषु चैकतरः ॥
गमनमुपदिशति पुंसां निवर्तनं वर्त्मनोऽन्यसंस्था वा ॥ ४४ ॥

**चरराशौ** चरलग्ने **उदयगते** लग्नतां प्राप्ते **भृगुः** शुक्रो **बुधः** सौम्यो **गुरु**र्जीवो **भास्करः** सूर्यः । तत्र चरलग्ने एषां मध्या**देकनरः** स्थितो भवति तदा **वर्त्मनो निवर्तनमुपदिशति** ॥ ४४ ॥

अथ गमनचिन्तामाह ।

ग्रहयोः सौराङ्गिरसोः पश्येदेकः स्थिरं समुद्यन्तम् ॥
गमनं गन्ताऽऽगमनं नास्तीति वक्तव्यम् ॥ ४५ ॥

**सौरः** शनैश्चरः । **अङ्गिरा** जीवः । अनयो**र्ग्रहयो**र्मध्या**देकः स्थिरं** स्थिरराशिं **समुद्यन्तं** लग्नगतं **पश्येद**वलोकयेत् । **गन्ता** गमनशीलो यदि **गमनं** प्रवास प्रवृत्तिनिमित्तं प्रश्नं करोति । **आगमनं** वा कस्यचित् पृच्छेत् तदा **नास्तीति** न भवतीति तस्य **वक्तव्यं** कथनीयम् ॥ ४५ ॥

अन्यप्रश्नार्थमाह ।

शुभैदा दुरधर( धुरुधुरा )योगे गमनं पुरुषस्य नास्ति रोधोऽस्ति ॥
अथवा गमनागमने गतस्य योगे च तद्वाच्यम् ॥ ४६ ॥

**शुभदाः** शुभग्रहास्ते यदि **दुरुध( धुरुधु )रायोगे** स्थिताश्च[ न्द्र ]स्य द्वि[ तीय ]द्वादशस्थानयोरपि यदि स्थिताः ।

**उभयस्थितैर्दुरुधुरा**। इति। ( लघुजातकम् । ९.१ ) एवंविधे पृच्छालग्ने योगे सति **पुरुषस्य** नरस्य **गमनं नास्ति** न विद्यते । **अथवा** पक्षान्तरे **गमनागमने** गमने तथाऽऽगमने । यः कश्चिद् गन्तुं प्रवृत्त आगन्तुं यातस्यापि **तद्वाच्यम् ।** तदेव रोधमुपधातं वक्तव्यम् । अथवा **गतस्य** निर्गतस्य याने गमने तदेव **रोधं** बध्यते ॥ ४६ ॥

अथ द्रव्यादिस्थाननिमित्तं राशीनां लक्षणमाह ।

हरिणझषाः सकुलीरा जले बिले वृश्चिकोऽथ कर्कटकः ॥

शेषाः स्थलप्रकाराः क्रतं ( कृता ) मनुष्यं ( ष्या ) तिरंश्चा ( स्तिरश्चो ) ऽन्ये ( ४७ ॥

**हरिणो** मकरो **झषो** मीनः । मीनस्य द्वित्त्वाद्धरिणझषा इति बहुवचननिर्देशः । एते **सकुलीराः** कुलीरेण कर्कटकेन सहिताः । **जले** जलप्रदेशे प्रकाराः । **शेषा** ये**ऽन्ये** नरा **मनुष्याः** पुनर्गृहनिवासिनः । एते हृतनष्टादौ स्वं स्वं स्थानं द्रव्यस्य चौरस्य वाच्यं जनयन्तीत्यर्थः ॥ ४७ ॥

अन्यप्रश्नार्थमाह ।

यद्यपि पापो निधने लग्नाच्चैकादशेऽपि वा प्रष्टुः ॥

आदिशति वर्तमानं व्याधिं दुःखस्य वा प[ त ]नम् ॥ ४८ ॥

**लग्नात्** पृच्छालग्नात् यद्यपि **निधने**ऽष्टमे स्थाने **पापः** पापग्रहो भवति । **एकादशेऽपि वा** स्थाने । तदा **प्रष्टुः** पृच्छकस्य **वर्तमानं** सपदि **व्याधिं** ज्वरादिकं **दुःखस्य** कृच्छ्रस्य वा **पतनमाप्तिमादिशत्यु**पदिशति ॥ ४८ ॥

अन्यप्रश्नार्थमाह ।

व्याधिं स्वभवनलग्ने जामित्रे निधनेऽस्ति मरणं वा ॥

कलहं प्रष्टुरुपये ( पेयाद् ) व्ययं पृच्छके तु वदेत् ॥ ४९ ॥

**यद्यपि पापो निधन** ( ४८ ) इत्यस्मात् पापग्रहणमनुवर्तते । पुच्छकस्य यद्भवनं राशिर्यच्च लग्नं जन्मलग्नं स्वभवनं च लग्नं च तत् **स्वभवनलग्नं** तस्मिन् पृच्छालग्ने **जामित्रे** सप्तमे स्थाने स्थिते **व्यय**मित्यर्थः । क्षयं **वदे**दिति ॥ ४९ ॥

अन्यप्रश्नार्थमाह ।

उययगतं शशितनयं शशिनं वा प्राग्लग्नमापन्नम् ॥
पश्यति वा यदि पापो व्याधिं तस्यादिशेत् प्राज्ञः ॥ ५० ॥

**शशितनयं चेदुदयगतं** लग्नस्थं **शशिनं** चन्द्रं वा **प्राग्लग्नमापन्नं** तात्कालिके पृच्छालग्ने समवस्थिते । **वा** शब्दोऽत्यर्थे न विकल्पे । बुधं चन्द्रं लग्नगतं **यदि** च **पापः** पपग्रहः **पश्यति** विलोकयति । तदा **प्राज्ञः** पण्डित**स्तस्य** प्रष्टुः व्याधिमादिशेत् ॥ ५० ॥

उदयगतं शशिननयं शशिनं वा प्राग्लग्नमापन्नम् ॥
भृगोर्यदि पुत्रो लभते वा पश्यति च पृच्छकाले स्त्रियश्चेष्टाः ॥ ५१ ॥

पूर्वलग्ने सोममुतं बुधं सोमं चन्द्रं वा पूर्वलग्ने स्थितं प्राग्लग्ने स्थितं **यदि भृगोः पुत्रः** शुक्रः **पश्यत्य**वलोकयति तदाः पुरुषः **पृच्छाकाले** प्रश्नसमये **इष्टा** अभिमताः **स्त्रियो** योषितो **लभते** प्राप्नोति ॥ ५१ ॥

अन्यप्रश्नार्थमाह ।

उदयगतं शशितनयं व्यालः पश्येदनुष्णाकिरणं वा ॥
अर्थाव्याप्तिर्विजयो न चाशुभमस्तीति नो ब्रूयात ॥ ५२ ॥

**शशितनयं** बुध**मुदयगतं** प्राग्विलग्नस्थ**मनुष्णकिरणं** शीतरश्मिं चन्द्रं यदा गतं **व्यालः पश्येत्** । पापग्रहोऽवलोकयेत् तदा प्रष्टु**र्ब्रूयाद्** वदेद् यथाऽर्थानामवाप्तिः प्रा**ग्विजयोऽ**भ्युदयः **शुभं** कल्याणं न च ते तवास्ति विद्यादिति सर्वमशुभमित्यर्थः ॥ ५२ ॥

अन्यप्रश्नार्थमाह ।

सोमायुतभौमं वा ।

अथ स्त्रीकलहार्थमाह ।

भौमः शुक्रं पश्येत् कलहं स्त्रीभिर्वदेदुदये ॥
गर्भविपत्तिः( त्तिं )सौरः करोति पत्न्यास्तवेति वदेत् ॥ ५३ ॥

**शुक्रं** भार्गवं लग्ने स्थितं यदि **भौमो**ऽङ्गारकः **पश्येद**वलोकयेत् तदा प्रष्टुः **कलहं** विवादं **स्त्रीभि**र्नारीभिः सह **वदेद्** ब्रूयादिति । अथ तथाभूतं शुक्रं **सौरः**

शनैश्चरः पश्येदवलोकयेत् तदा प्रष्टुर्वक्तव्यं **तव पत्न्या** जायाया **गर्भविपत्तिं** गर्भनाशं **करोति** योगस्थः सौर **इति वदेत्** ॥ ५३ ॥

अन्यप्रश्नार्थमाह ।

केन्द्रगते( तं )यद्यरुणं पश्येत् सौरः करोति चोरभयम् ॥
आपदमतिघोरां वा कलहं स्त्रीभिर्विनिर्दिशेन्नियतम् ॥ ५४ ॥

**केन्द्रगतं** लग्नचतुर्थसप्तमदशमानामन्यतमे स्थिमादित्यं **सौरः** शनैश्चरः **पश्येद**वलोकयेद् **यदि** तदा **चोरभयं** भीतिं **करोति** विदधाति । अथ**वाऽतिघोरां** भयप्रदा**मापदं** विपदं करोति विदधाति । तथा **नियतं** निश्चितं **स्त्रीभिः कलहं** विवादं करोति विनिर्दिशेत् ॥ ५४ ॥

अन्यप्रश्नार्थमाह ।

व्याधिर्नाशो यस्य च भयमतुलं भास्करिर्यदा पश्येत् ॥
यद्युदये वाऽथ रविर्भवतीति वदेदसन्दिग्धम् ॥ ५५ ॥

**रविः** सूर्यः । **उदये** लग्ने स्थितं **यदि भास्करिः** सौरः **पश्येद**वलोकयेत् । तदा प्रष्टु**र्व्याधि**र्ज्वरो तथान्य( न्योन )र्थ( र्थो )वार्थस्य ततो **नाशो** हानि**रतुल**मसमं **भयं** भीतिर्भवतीत्य**सन्दिग्धं** निस्संशयं **वदेत् । अथवे**ति विकल्पार्थः ॥ ५५ ॥

अन्यप्रश्नार्थमात ।

स्वोच्चत्रिकोणभवनस्य च भं च यन् मित्रसंज्ञितं तस्य ॥ ५६ ॥

**स्वोच्चं** रवेरुच्चं मेषः । अस्य **त्रिकोणं** सिंहः । स्वराशिः सिंह एव । तथा तस्य **यन् मित्रसंज्ञकं** तात्कालिकमित्रक्षेत्रम् । एषां मध्यादेकतमलग्नस्थौ ग्रहावनन्तरप्रवृत्तौ भौमसौरौ पश्यन्तौ तथा तेनैव प्रकारेण प्रष्टुर्वक्तव्यं ते तव प्रश्ने श्रेयो नास्ति ॥ अत्र त्रिकोणस्वभवनयोर्विशेषः । विंशतिरंशाः सिंहस्त्रिकोणमपरं च स्वभवनं च सूर्यस्येति ॥ ५६ ॥

अन्यप्रश्नार्थमाह ।

वृद्धिं विजयार्थं च करोति वा मैत्रीं समानयति कार्यम् ॥
यद्वा ( लाभ )मर्थादिकानां जयमभ्युदयम् ॥ ५७ ॥

एतौ तथाऽर्थं धनम् । **वा**शब्दोऽत्र चार्थे । **वृद्धिं विजयार्थं च करोति ।** तथा **मैत्रीं** मित्रतां **समानयति कार्यं** करणीयं **समानयति ।** तथा नष्टस्यापहृतस्य **लाभ**मिति ॥ ५७ ॥

अन्यप्रश्नार्थमाह ।

रिपुदर्शे रिपुवृद्धिं भ्रंशोऽथवा स्थानतश्च नाशश्च ॥
नष्टस्य[न]चाप्तिर्भवति नराणां च मित्रविप्रीतिः ॥ ५८ ॥

यः कश्चिद् ग्रहो रिपुराशिं शत्रुभवनं लग्नगतं दर्शे दर्शनं तस्मिन् **रिपुदर्शे** **रिपुवृद्धिं** शत्रुवृद्धिं वदेत् । **अथवा स्थानतः** स्वस्थान**भ्रंशश्च** । धनं(नस्या)र्थस्य **नाशः** । **नष्टस्या**पहृतं(तस्य)तस्य वित्तादिकस्य **न चाप्ति**र्न प्राप्ति**र्भवति** । तथा **मित्रैः** सुहृद्भिः सह **विप्रीति**[र्न]सस्नेह इति प्रष्टुर्वदेत् ॥ ५८ ॥

अन्यप्रश्नार्थमाह ।

भृगौ(गु)जीवौ यदि षष्ठौ बुध उदये न(भसि)चाश्रितो रुधिरः ॥
स्थानं धनं च विजयं राज्यं वा पृच्छको लभते ॥ ५९ ॥

**भृगुः** शुक्रः । **जीवो** बृहस्पतिः । एतौ यदि पृच्छालग्नात् **सप्तमे**(षष्ठे)स्थाने स्थितौ भवतः । **बुधः** सौम्य **उदये** प्राग्लग्ने । **नभसि च** दशमस्थाने **आश्रितः** समवस्थितो **रुधिरो** भौमः । एवंविधे योगे **पृच्छकः** प्रष्टाऽवस्थिति**र्धनं** वित्तं **विजय**-मभ्युदयं राज्ञो **राज्यं लभते** प्राप्नोति । वाशब्दोऽत्रार्थे ॥ ५९ ॥

अन्यप्रश्नार्थमाह ।

उदयोगिरिसु(येऽङ्गीराश्च) सूर्यो मेषूरणसंस्थितोऽपि वा ॥
प्रष्टा लभते विजयमविकलं राज्यमैश्वर्यमन्यद्वा ॥ ६० ॥

**उदये** प्राग्लग्ने चेद्यद्यङ्गिरा गुरुर्भवति । **सूर्ये** अदित्यो **मेषूरणे** दशमे **स्थितोऽपि** चेति प्रकाशो **यःप्रष्टा** पृच्छको **विजयम**भ्युदय**मविकलं** परिपूर्णं **राज्यं** नृपत्वम**थैश्वर्य**मीश्वरत्व**मन्यद्वा** सुखादिकं **लभते** प्राप्नोति ॥ ६० ॥

अन्यप्रश्नार्थमाह ।

सूर्येऽम्बरमध्यगते गुरुर्विलग्ने चन्द्रमा हिबुके ॥
तिष्ठति जामित्रे वा लभते ना सद्य एवार्थम् ॥ ६१ ॥

**सूर्य** आदित्य **अम्बरमध्या**स्थिते दशमस्थानावस्थिते सति यदि **गुरु**र्जीवो **विलग्ने** प्राग्लग्ने भवति । अथवा **चन्द्रमाः** शशी यदि **हिबुके** चतुर्थस्थाने **तिष्ठति**। **जामित्रे** दशमे शशी तिष्ठति । **ना** मनुष्यः **सद्य**स्तस्मिन्नेवाहनि । **अर्था**दि धनानि **लभते** प्राप्नोति ॥ ६१ ॥

अथान्यप्रश्नार्थमाह ।

शुभयोरुदयास्तगयोर्दशमायतृतीयगेषु पापेषु ॥
प्रणमन्ति शत्रुसङ्घा लभते ना सारमर्थस्य ॥ ६२ ॥

**शुभयो**र्जीवशुक्रयो**रुदयास्तगयोः ।** तन्मध्यादेक उदये लग्ने द्वितीयोऽस्तमये सप्तमस्थाने । तथा **पापेष्र्क**भौमशनैश्चरेषु **दशमायतृतीयगेषु ।** एतेषु यदि पापग्रहाः समवस्थिता भवन्ति तदा **शत्रुसंघा** अरिसमूहाः **प्रणमन्ति** नमस्कुर्वन्ति । **ना** मनुष्यो**ऽर्थस्य** धनस्य **सारमु**त्कृष्टं **लभते** प्राप्नोति ॥ ६२ ॥

अन्यप्रश्नार्थमाह ।

उदयादेकादशमे भृगुबुध[ गुरु ]भास्करेषु चैकतरः ॥
नगराधिपस्य विजयं करोति दशमे तथा भ्रंशम् ॥ ६३ ॥

**भृगुः** शुक्रः । **बुधः** सौम्यः । **गुरु**र्जीवः । **भास्करः** सूर्यः । एषामन्यतमो **उदयात्** लग्ना**देकादशे** स्थाने समवस्थितो भवति । तदा **नगराधिपस्य** पुरप्रभो**र्विजयमभ्यु**दयं **करोति** विदधाति । अथ चैषां मध्याद् दशमस्थाने भवति तदा **नगराधिपस्य** पुरप्रभो**र्भ्रंशं करोति** विनाशं करोति ॥ ६३ ॥

अथ परचक्रागमनमाह ।

पापास्तृतीयपञ्चमषष्ठैकान्त्ये( षु ) भवन्ति यदि लग्नात् ॥
आगच्छति तदा परचक्रं चतुराशौ न तच्चास्ति ॥ ६४ ॥

**पापाः** प्रसिद्धाः । **यदि लग्नात्** पृच्छालग्नात् **तृतीये पञ्चमे षष्ठे एकस्मिन्** पृच्छालग्नात् प्रथमे विलग्न इत्यर्थः । **अन्त्ये** द्वादशस्थाने **भवन्ति** तदा **परचक्रं** शत्रुसमूहः **समागच्छत्या**याति । लग्ना**च्चतुर्थराशौ** यदि भवन्ति तदा **न तच्चास्ति** तत्परचक्रं नायातीत्यर्थः ॥ ६४ ॥

अन्यप्रश्नान्तरमाह ।

आरोऽप्यर्कसुतो वा रसातले भास्करोपि वा भवति ॥
नागच्छति पर( रिपु )सेना गुरुबुधशुक्रैस्तु विपरीतम् ॥ ६५ ॥

**आरो**ऽङ्गारकः । **आर्कसुतोऽपि** सौरः । **भास्करो वा** सूर्यः । एषां मध्यादेकतमो **रसातले** चतुर्थस्थाने यदि **भवति** पृच्छालग्नात् तदा **रिपुसेना** शत्रुवाहिनी **गच्छती**त्यर्थः ॥ ६५ ॥

अन्यप्रश्नाअन्य( र्थ )माह ।

द्वादशदशमैकादशलग्नेश्वरो( ष्वेको )पि वा वसति पपः ॥
हरति पुरं दद्याद्वा शुभोऽपि चैतेषु संवसति ॥ ६६ ॥

**द्वादशदशमैकादशलग्नानि** सं( सु )प्रसिद्धानि । एतेषु स्थानेषु **चैको**ऽपि **पापः** पापग्रहो **वसति** यद्यस्ति तदा प्रष्टुः **पुर( रं )** पनेरि( हरेदि )त्यर्थः । **एतेषु** द्वादशा[ दि ]स्थानेषु यदि **शुभः** सौम्यो ग्रहः **संवसत्या**स्ते तदा **पुरं दद्यात्** प्रयच्छेत् ॥ **वा**शब्दोऽत्र पादपूरणार्थे ॥ ६६ ॥

अन्यप्रश्नार्थमाह ।

उदये वा जामित्रे मेषूरणसंस्थितेषु सौम्येषु ॥
नगराधिपस्य विजयं प्रवदेन्नास्त्यत्र सन्देहः ॥ ६७ ॥

**उदये** प्रश्नलग्ने **जामित्रे**ऽथवा **मेषूरणे** दशमे वा । एतेषु स्थानेषु **सौम्येषु** शुभग्रहेषु **स्थितेषु** सत्सु **नगराधिपस्य** पुरप्रभो**र्विजय**मभ्युदयं **प्रवदेद्** ब्रूयात् । **न सन्देहः** संशयो न विद्यत इति ॥ ६७ ॥

अथ युद्धप्रश्नार्थमाह ।

भवनं पापमुगतं पूर्वविलग्नं समाश्रितं वाऽपि ॥
युद्धं दिशति घोरं पश्यन्तः पापतः पापाः ॥ ६८ ॥

**भवनं** राशिं **पापमुगतं वाऽपि** । पापराशिमेषसिंहवृश्चिकमकरकुम्भानामन्यतमलग्नं **मतं** प्राप्तम् । अथवा **पूर्वविलग्ने** पापग्रह**समाश्रितं** समवस्थितं तदा **घोर**मतिव्यं ( तीव्रं ) **युद्धं** संग्रामं **दिशत्यु**पदिशति । **पापाः** क्रूराः पूर्वग्रहाः **पश्यन्तो** लग्नमवलोकयन्तः **पापतः** पापकर्मणाऽर्थाद्येन **युद्धं** दिशन्ति मुनयः ॥ ६८ ॥

अन्यप्रश्नमाह ।

हिबुक[ वि ]लग्नेऽपि तथा दशमे च तयोश्च यदि पापाः ॥
ययान्( यी ) नगरविनाशी भवति वदेदसन्देह[ दिग्ध ]म् ॥ ६९ ॥

**हिबुकं** चतुर्थं **विलग्नं** प्रागलग्नं हिबुकं विलग्नं तद्धिबुकविलग्नं तस्मिन् **हिबुकविलग्ने** च यदि पापः पापग्रहो भवति । तथा तेनैव प्रकारेण **दशमे** स्थाने पापो भवति । अथ **तयोश्च** हिबुकविलग्नदशमयोः पापौ भवतः । **केचिद्** हिबुकविलग्नं चतुर्थमेवेति । तदा **यायी** गन्ता **नगरविनाशी** नगरं विनाशयतीति । **तच्छीलो** भवति । **इत्यसन्दिग्धं** निःसंशयं **वदेत्** ॥ ६९ ॥

अन्य[ प्रश्नमाह ] ।

उदयगतेऽर्के पुसां दशमे तयोस्तु यदि सौम्यः ॥
भवति योगसिद्धिर्विज्ञातव्या मनुष्येण ॥ ७० ॥

**अर्के** आदित्ये **उदयगते** प्राग्लग्नस्थे अथवा **दशमस्थे**ऽर्के **तयो**श्चोदय-दशमयोर्यदन्यः शुभः सौम्यग्रहो भवति । तदा **मनुष्येण** पुरुषेण दैवज्ञेन **पुंसां** पुरुषाणां **योगसिद्धि**र्विज्ञानप्राप्ति**र्विज्ञातव्ये**त्यर्थः ॥ ७० ॥

अथ बन्धनयोगमाह ।

हर( रि )तुरगमेषवृषभा हिबुकस्थाः प्राग्विलग्नमारूढाः ॥
रिक्ता ग्रहसहिता वा शंसन्ति बन्धनं शत्रोः ॥ ७१ ॥

**हरिः** सिंहः **तुरगो** धन्वी **मेषो**ऽजः **वृषभो** वृषभ एव। एते **हिबुकस्थाः**। एषामन्यतमश्चतुर्थो भवति । अथ **प्राग्विलग्नं** पूर्वलग्न**मारूढा**स्तत्र स्थिताः । एषामन्यतमो विलग्नगो भवति। **रिक्ता** ग्रहविरहिता ग्रहैर्वा सहिताः। तथापि **शत्रो**रिरे**र्निबन्धनं शंसन्ति** मुनय इति ॥ ७१ ॥

अधुना गमनागमनप्रश्नमाह ।

उदयं वा चरराशौ करोति यदि भास्करिर्गुरुर्वापि ॥
गमनं वाऽऽगमनं वा स्कन्धावारस्य निर्देश्यम् ॥ ७२ ॥

**भास्करिः** सौरो **गुरु**र्जीवः । अनयोरन्यतर**श्चरराशा उदयं करोति**। चरा मेषकर्कितुलामकरा णा( एषा )मन्यतमे लग्नलग्नेष्वनयोर्मध्यादेकतरो भवतीत्यर्थः । तदा **स्कन्धावारस्य** राजबलस्य। **गमनं** गति**रागमनं** प्रत्यावृत्तिः । **निर्देश्यं** वाच्यमिति ॥ ७२ ॥

अन्यप्रश्नार्थमाह ।

स्थिरराशौ यद्युदयं करोति सूर्यो गुरुर्वापि ।
गमनं वाऽप्यगमनं वा न विद्यते सेनयोरुभयोः ॥ ७३ ॥

**सूर्य** आदित्यो **गुरु**र्जीवः । अनयोरेकतरः **स्थिरराशौ यद्युदयं करोति** स्थिरराशिर्लग्नं गतः । तत्र तयोरन्यतरः स्थितो भवति । तदा **सेनयोरुभयो**र्द्वयोर्वा**पि** नागरसेनयो**र्गमनागमनं न विद्यते** न भवति ॥ ७३ ॥

अन्य[ प्रश्नार्थमाह ] ।

स्थित्वा विदिक्षु च गन्ता पृच्छति शीर्षोदये यदा तदा प्रष्टा ॥
यातुर्यात्रासिद्धिं [ ब्रूयात् ] तथाऽर्थस्य लाभं च ॥ ७४ ॥

**प्रष्टा** पृच्छकः **स्थित्वा विदिक्ष्वा**ग्नेयनैऋतवायव्येशानीषु **गन्ता** तत्रस्थ-**शीर्षोदय**लग्ने मिथुनसिंहकन्यातुलावृश्चिककुम्भमीनानामन्यतमे तत्काललग्ने यदि **पृच्छति** प्रश्नं करोति **तदा** तस्य **यात्रासिद्धिं** गमननिष्पत्तिं **शिवं** श्रेयस्तथा**ऽर्थस्य** विस्तर (त)स्य **लाभं** लब्धिं **ब्रूयाद्**वदेत् ॥ ७४ ॥

अन्य[ प्रश्नार्थमाह ] ।

भीतिं शत्रुविवृद्धिं व्याधिं च पापखेचरे लग्ने ॥
स्कन्धावारस्य वदेदुदयगते वा चरे विजयम् ॥ ७५ ॥

चरराशयश्चत्वारो मेषकर्किंतुलामकराः । तत्र मेषमकरौ पापक्षेत्रे । कर्कटतुले सौम्यक्षेत्रे । **चरे** विलग्ने पापग्रहराशौ लग्नगते मेषमकरयोरन्यतरे **स्कन्धावारस्य** राजपरिवारस्य **भीतिं** [ परा ] जयं शत्रूणां रिपूणां वृद्धिमाधिक्यं **व्याधिं** ज्वरादिकं **वदेद्** ब्रूयात् अन्यस्मिन् **चरे** राशौ **उदयगते** कर्कटतुलयोरन्यतरे स्कन्धावारस्य **विजयं** वदेत् ॥ ७५ ॥

अन्य [ प्रश्नार्थमाह ] ।

लग्नैकादश [ दश ]मे पापो वा पृच्छकस्य धनं ( न ) भवतौ ( ने ) ॥
तिष्ठति शुभसहितश्चेत्तथापि वृद्धिं वदेत् सह ताम् ( महतीम् ) ॥ ७६ ॥

एकादश [ दश ]मौ प्रसिद्धौ लग्नाद्यदेकादश [ दश ]मं **तल्लग्नैकादशदशमं** ततो द्वितीयस्थाने यदि **पापः** पापग्रहः **शुभसहितः** शुभग्रहेण संयुक्**तस्तिष्ठति** तदा प्रष्टु**र्वृद्धिं वदेत्** । इत्यन्ते **वृद्धि**शब्दो मङ्गलार्थमाह ॥ ७६ ॥

दृष्ट्वा **गर्गवसिष्ठदेवल**कृतां **पाराशरीं यावनी—**
मन्यां चापि हि **बादरायण** इमां यां **प्रश्नविद्यां** व्यधात् ॥
तस्यां विद्वदनिष्टयोगजनितप्रेमाद्यसम्प्राप्तधीः
शिष्याणां हितकाम्यया विवरणं चक्रे द्विजाग्र्य**योत्पलः** ॥ १ ॥

**बादरायण**कृतेऽस्मिन् **प्रश्नशास्त्रमहोदधौ** ॥
अर्थिना**मुत्पल**श्चक्रेऽर्थावाप्त्यै विवृतिप्लवम् ॥ २ ॥

**चिन्तामणी**ति विख्यातटीकायां शास्त्रवल्लभात् ॥
अनुष्टुभां शतान्यस्ताः ( त्र ) पञ्चमानमुदीरितम् ॥ ३ ॥

इत्युत्पलाचार्यकृता बादरायणप्रश्नटीका संपूर्णा ॥